जलन्धराष्टकं

श्रीमच्छङ्करपादमब्जयुगलं नत्वाऽऽत्मदीपं मुदा
    विद्याद्याखिलनाकपैरपि सदा सेव्यं मनोरञ्जनम् ।
यत्पाठश्रवणानुरक्तहृदयः सद्योऽमृतं याति वै
    तच्छ्रीनथजलन्धराष्टकमिदं वक्ष्ये सदा शम्प्रदम् ॥ १॥

श्री नाथाय नमः ॥

कटाक्षिपातेन भवन्तीमेऽस्य यच्छक्तितो वै स्थितिपालनाशाः ।
श्रीमानराज्ञार्चितपादपीठं वन्देऽन्वहस्तं ककरानतेन ॥ २॥ श्रीनाथ ॥

यस्यामलाजनसदःसु यशोविगीतिः
    यस्तां शृणोति स जनः शिवमेति तूर्णम् ।
तेन प्रजार्तिहनृपेण विशुद्धधाम्ना
    ध्याता सदाकृतिरहं भवभीर्नतोऽस्मि ॥ ३॥ शिव शिव
गायन्ति यं श्रुतिमुखाः परिहृत्य शेषं
    ध्यायन्ति योगिषु वराश्च निरूढमार्गाः ।
नासान्तदेशकृतदष्टय ऊद्विजन्तोऽ-
    न्योन्यप्रभाषणभयाद्भवभीर्नतोऽस्मि ॥ ४॥

त्वत्पादकल्पतरुमूलनिसेवकोऽहं
    तापत्रयेण पिहतः शरणागतोऽस्मि ।
कृत्यात्मनां च सुकृती नु कदा भवेयं
    श्रीनाथ पाहि भगवन् भवभीर्नतोऽस्मि ॥ ५॥

एनांसि सर्वाणि लयं प्रयान्ति यन्नामकीर्तेः पुरुषस्य नित्यम् ।
विद्योदये भ्रान्तिरिवारिषट्कं निवारयाहिं भवभीर्नतोऽस्मि ॥ ६॥

पुराऽस्य साक्षिन् बहवोऽपि योगिनो गत्ताः स्वरूपं त्वयि धारितासवः ।
भवप्रवाहे पतितं तथापि मां समुद्धर तं भवभीर्नतोऽस्म्यहम् ॥ ७॥

सर्वाधारमनारम्भं समं सर्वत्र वै स्थितम् ।
तं ध्यात्वा मुच्यते तूर्णं नान्यैः कृत्यैः कदाचन ॥ इति
मनो निवेश्य त्वयि सिद्धिमाप्नुयामितीच्छितं पूरय मे किल प्रभो ।
यापङ्कजाङ्घ्रिं भजतां विवेकिनां कुतो न्वरिष्ठा भवभीर्नतोऽस्म्यहम् ॥ ८॥

यः श्रीनाथजलन्धराष्टकमिदं भक्त्या पठेदन्वहः
    सोऽरिष्टारिचमूपमूर्धनि पदं न्यस्याटतीवार्भकः ।

विद्वद्भिः परिसेवितं प्रतिदिनं संयोगमार्गेषुभिः
तच्छ्रीमङ्गलमातनोत्वलमिति प्रान्तं गतं तत्सताम् ॥ ९॥

श्रीनाथाय नमः । शिवाय नमः ॥

प्रातरुत्थाय यो भक्त्या श्रीनाथाष्टकमुत्तमम् ।
पठेद्वा शृणुयान्नित्यं स नरो मुक्तिभाग्भवेत् ॥ १०॥

इति श्रीजलन्धराष्टकं स्तोत्रं सम्पूर्णम् ॥ श्रीनाथाय नमः ॥